संस्कृत-साहित्य-परिषद् -ग्रन्थमालायाम्
३८ संख्यको ग्रन्थः

# —अथ किम्—

रचितं 'बुड़ोदा' समाख्येन




कलिकाता-संस्कृत-साहित्य-परिषदा
प्रकाशितम्
१९७४

## SANSKRIT SAHITYA PARISAT
# SERIES

1. Kapalakundala—Edited by Pt. Haricharan Vidyaratna (Out of stock). Re. 1.

2. Kalitantram—Edited by Pt. Satish Chandra Siddhanta-bhushana. Re. 1.25 ; (Out of stock).

3. Sankari-sangitam of Jayanarayana—Edited by Pt. Dakshinacharan Bhattacharya. (Out of stock). Re. 1.

4. Muktivadah of Gadadhara Bhattacharya—Edited by M. M. Kalipada Tarkacharya. (Out of stock). Rs. 5.

5. Durgapuja-tattvam of Raghunandana Bhattacharya—Edited by Pt. Satish Chandra Siddhantabhushan. Rs. 2 50 ; Rs. 2. (for members).

6. Pitridayita of Aniruddha Bhatta—Edited by Pt. Dakshinacharan Bhattacharya. Rs. 2 50. (Out of stock).

7. Durgotsava-vivekah of Shulapani—Edited by Pt. Satish Chandra Siddhantabhushan. Re. 1 ; .75 for members).

8. Karakollasah of Bharata Mallika—Edited by Pt. Janaki-nath Sahityashastri. .25

9. Introduction to the Rigveda of Sayanacharya—Edited by Dr. Pashupatinath Shastri, M. A., B. L., Ph. D. Re. 1 5 ; Rs. 1.25 (Out of stock).

10. Grahayaga-tattvam of Raghunandana Bhattacharya Edited by Pt. Satish Chandra Siddhantabhushana., 88 P. ; .62 P. (for members).

11. Prabhakara-vijayam of Nandishvara—Edited by Mahamahopadhyaya Anantakrishna Shastri Vedantavisharada and Pt. Ramanath Shastri. Rs 2.5 ; Rs. 2 (for members).

12 Tirthatattvam of Raghunandana Bhattacharya—Edited by Pt. Bamacharan Kavyatirtha. .75 P ; .50 P for members).

13. Pavanadutam of Dhoyi, a court poet of Lakshmana-sena of Bengal—Edited by Prof. Chintaharana Chakravarti, M.A. 1 50 Re. ; Re. 1 25 (for members).

संस्कृत-साहित्य-परिषद्-ग्रन्थमालायाम्
२८ संख्यको ग्रन्थः

# —अथ किम्—

( व्यङ्ग नाटिका )

बुड़ोदा-रचितम्

१३७६ वङ्गीयाब्दस्य
श्रीपञ्चम्याम्

# निवेदनम्

१९६९-इसवीयाब्दे मद्रचितस्य धरित्री-पति-निर्वाचनमिति रूपकस्याभिनयं दृष्ट्वा महामहोपाध्याय-डक्टर-कालीपद-तर्काचार्यप्रमुखा गुरुचरणा आधुनिकीं नाट्य-शैलीमनुसृत्य रूपकरचनाय मां समादिष्टवन्तः। तैरेवं प्रोत्साहितेन रचितं मयेदम् "अथ किम्"। एतदपि संस्कृत-साहित्य-परिषदः पञ्चपञ्चाशत्तमं वार्षिकमुत्सवमुपलक्ष्य परिषच्छात्रैरभिनीतम्। तत्र सहृदयसमाजः समलङ्कृतोऽस्मदाचार्यवर्यैः डक्टर-श्रीगौरीनाथ शास्त्रिभिस्तथा मान्यैरन्यैरपि कैश्चित् प्राच्य-पाश्चात्त्य-नाट्य-विद्भिः। तेषामेव नाट्य-रसिकानां प्रशंसया प्रणोदितोऽहं समर्पितवानिदं प्रकाशनार्थं संस्कृत-साहित्य-परिषत्पत्रिकायाम्। ततः स्वतन्त्र-पुस्तिका-कलेवरलाभस्तु सुहृदामाग्रहेणास्य।

रूपकस्यास्य का नाम जातिरिति मया न व्याख्येयम्। भारतीया रीतिस्तु नात्र सर्वथानुसृता, पाश्चात्त्य-नाट्य-प्रभावोऽत्र वर्तत इति तु स्फुटमेव। केयं सा नवीना पाश्चात्त्य-रीतिः, किं वास्या वैशिष्ट्यमित्येतत् सर्वं नात्र पर्यालोचनमर्हति एतावदत्र निवेद्यते यदधुना निरर्थक-हास्यरस-परिवेषणस्य नास्त्यवकाश इति मन्यन्ते विदग्धाः सामाजिकाः, नाट्येऽपि तन्न दृश्यते। हास्यच्छलेन कुत्रापि प्रश्न एवोपस्थाप्यते न दीयत उत्तरम्, न ज्ञायते वा किमुत्तरमस्य, सर्वैरेव वा ज्ञायते तत्। कुत्रचिद्वा समस्यास्वरूपोद्घाटनम्, क्वचिद्वा प्रचलितमूल्यबोधस्य निःसारतां प्रतिपादयितुं विद्रूपबाणक्षेपणमेव

दृश्यते हास्य-रस-परिवेषण-च्छलेनाद्यत्वे रूपकोपजीव्यतया। आविष्क्रियते यद्येवं प्रयासोऽत्र केनापि तत्र तस्यैव वैदग्ध्यम्। पात्राणां कस्यापि प्रातिस्विकं व्यक्तित्वं नास्तीति तेषां नामानि न मया विहितानि। एकैक-स्वर-व्यञ्जन-स्वरूपास्ते यथायोगं संहतिमर्हन्ति।

रूपकमिदं यदि रोचेत आधुनिक-नाट्य-रसिकेभ्यस्तर्हि कृतार्थो भवामि। कृतज्ञतां विज्ञापयामि यत् संस्कृत-साहित्य-परिषदिदं रूपकं प्रकाशयति। प्रकाशनव्यापारेऽग्रजप्रतिमेन श्रीमता रामधन-शास्त्रि-महोदयेन यः खलु श्रमोऽङ्गीकृतः, मयि तस्य स्नेह एव तत्र कारणमिति मया सबहुमानं स्वीक्रियते।

१३७६–वङ्गीयाब्दस्य
श्रीपञ्चम्याम्

विनीतस्य रचयितुः

## अथ किम्

अभिनीतमिदं परिहास-रूपकं संस्कृत-साहित्य-परिषत्-सदस्यैः १६७२ इसवीयाब्दे एप्रिल-मासस्य २३—दिवसे रवि-वासरे सन्ध्यायाम् ।

### प्रथमाभिनये अंशग्रहणकारिणः

नान्दी— श्रीसुशीलकुमार वन्द्योपाध्यायः, एम्-ए

सूत्रधारः<br>कः } ड० श्रीसिद्धेश्वर चट्टोपाध्यायः

खः—अध्यापक श्रीदीपककुमार चट्टोपाध्यायः

गः—अध्यापक श्रीनिर्मलकुमार वसुः

घः—अध्यापक श्रीध्यानेशनारायण चक्रवर्त्ती

ङः—ड० श्रीप्रतापचन्द्र वन्द्योपाध्यायः

चः—अध्यापक श्रीरवीन्द्रनाथ भट्टाचार्यः

आः—श्रीमती हेना वसुजा, एम्-ए

ऊः—श्रीमती राधाराणी दत्तरायजा, एम्-ए

नेपथ्यवादक :—श्रीपङ्कजकुमार वक्सी

स्मारकः—अध्यापक श्रीमानवेन्दु वन्द्योपाध्यायः

मञ्चव्यवस्थापका :—ड० श्रीहेरम्बनाथ चट्टोपाध्यायः<br>श्रीइन्द्रमोहन चक्रवर्त्ती<br>श्रीमधुसूदन वेदान्तशास्त्री

भोः

संस्कृत-साहित्य-परिषन्नट-भ्रातरः,—
प्रोत्साहनेन भवतां मयैतद्रचितम्,
तत्तु विभूषितं मञ्च-साफल्य-माल्येन
भवद्भिरेव रूपदक्षैः। मानयाम्यहं तु
भवतामत्राधिकारम्। गृह्णन्तु भवन्तः
प्रीत्या बुड़ोदा-रचितं परिहासाश्रितं
रूपकमथ किमिति।

# अथ किम्

( परिहासाश्रयि रूपकम् )

( नेपथ्ये नान्दी )

पुरातनं यात्यधुना विनाशं
नवीनमद्येह विभातु कामम् ।
नमाम्यतोऽहं प्रसमीक्ष्य कालं
समुद्घटाख्यं नवनाट्यदेवम् ॥

( नान्दीगीतावसरे यवनिकापसृता । नेपथ्याभिमुखो युक्त-करो दण्डायमानः पञ्चाशद्वर्षदेशीयः प्रौढः सूत्रधारः । )

सूत्रधारः—( प्रेक्षकाभिमुखः ) सदसे नमः । संस्कृत-साहित्य-परिषदः पञ्चपञ्चाशत्तमवार्षिकमुत्सवमुपलक्ष्य मन्ये भवद्भिरत्राभिनय-दर्शनार्थमागतम्, तत्रापि संस्कृतरूपकस्य । परमद्यत्वे सर्वं जातमसंस्कृतम्,—देहे, चित्ते, समाजे संस्कृतस्य गन्धोऽपि

नास्ति। अभिनयश्च भवति सर्वत्रैव—मार्गे, हट्टे, घट्टे, परिवारे, विद्यालये, विधानसभायामपि। तथापि कथं भवतां संस्कृत-रूपकाभिनयदर्शनेच्छा जाता तन्नावधारयामि। मन्ये वास्तवविमुखाः सर्वे भवन्तः। नायं तिरस्कारः, स्वयमप्यहं भवद्गोष्ठीगत एव।

यथा तथा वा भवतु, समायाता तत्रभवन्तः, अतोऽभिनयोऽपि भविता। अवधानं प्रार्थये भवताम्। अभिनेतव्यमस्माभिरद्य 'बुड़ोदा'समाख्येन परिषन्नटानामेकेन बन्धुवरेण वर्षद्वयात् प्राग् विरचितं किमपि रूपकं, नाम तु तस्य अथ किमिति। अभिनयोऽपि प्रारभ्यत अधुनैव। अहमस्मि कश्चिन्नटः, कुत्रापि कदाचिद्दण्डायमानः।

(इतः सूत्रधारः 'क'-नामा। अनवसितेऽपि तस्य संलापे प्रविशति विचित्रावरणं पुस्तकं पठन्त्येव कापि तरुणी कर्मस्थलं गन्तुकामा। नाम तस्याः 'आ'। अभिनयावसरे अवकाशं लब्ध्वैव सा पुस्तकं पठिष्यति। आगच्छन्ती सा 'क'स्योपरि पतित्वा झटित्येवापसृत्य सरोषम्— )

आ— Nonsense (वर्वर)! किं न पश्यसि भद्रमहिलामप्यागच्छन्तीम्?

कः— Sorry (अपराद्धोऽस्मि)। परमागच्छन्तीं न दृष्टवान् दर्शनीयामपि। अविचारः कृतो विधात्रा अक्षिद्वयमेव मह्यं दत्त्वा, तत्रापि सम्मुखे।

आ— अविचारः कृतो विधात्रा शृङ्गयुगलं तुभ्यमयच्छता।

कः— भद्रे मैवम्, शृङ्गयुगलं तेन दत्तम्, परं स्थानेऽस्थाने आघातमभ्यस्यमानस्य मे तत्तु भग्नम्।

आ— ( उत्तेजिता ) शृङ्गधारी जन्तुरिवाचरसि, न जानासि—

कः— ( सविनयम् ) जानामि सर्वम्। परमतितीक्ष्णं मे विषाणयुगलं यौवने भग्नम्। अधुना जानन्नपि किमपि न कथयामि, यतोऽद्यत्वे सत्यकथनाय प्रयोजनीयं सुतीक्ष्णं ( शृङ्गाघातमुद्रां नाटयति )।

आ— ( सभयमपसृत्य ) अभद्र, अचिरेणैव भविष्यति त्वत्सदृशानां समुचिता शिक्षा। आगच्छतु तत्रभवान्।—

कः— जातैवास्माकं समुचिता शिक्षा। शिक्षामाहात्म्येन वयं हि द्रष्टारो न वक्तारः। नास्त्यस्माकं शृङ्गम्। यातु,—किमुक्तं भवत्या? क आगच्छति? कदा, कुत्र वा?

आ— Rubbish, nonsense ( मूर्खोऽवस्करः )।

कः— तदपि सत्यम्।

आ— किम्?

कः— यदुक्तं भवत्या। सर्वत्र तदेव वस्तु शोभतेतराम्,—गृहे, हट्टे, घट्टे, विद्यालये, विश्वविद्यालये, लोकसभायां, विधानसभायां सर्वत्रैव। ( सहसा स्वमस्तकं धृत्वा ) पश्यतु, पश्यतु भवती, शृङ्गद्वयं मे पुनरुद्गतमिति मन्ये।

आ— ( स्वगतम ) किमयमुन्मादः? ( प्रकाशम ) किं कथयसि?

कः— तथ्यमुक्तं किञ्चित्। ( हस्ताभ्यां स्वमस्तकं परामृश्य ) न हि न हि, मिथ्या, नोद्गतं मे शृङ्गम्। पश्यतु तावत्, कस्यापि नास्ति शृङ्गम्, यस्य वास्ति सोऽपि केशैरन्येन वा केनापि तत् संगोप्य बहिश्चरति, कोऽपि शृङ्गं न दर्शयति। ( सहासम ) युगेऽस्मिन्, अनावृतशृङ्गा एव उन्मादः—मम तु नास्त्येव; परमासीद् यौवने वयसि।

आ— हुम्; तथैव मन्ये—

कः— ( सानन्दम् ) सर्वं बुद्धमधुना भवत्या। कथयतु तर्हि क आगच्छति, कुत्र आगच्छति, आगमिष्यति वा कदा, इत्येतत् सर्वम्।

( प्रविशति तारस्वरेण कथयन् कर्कशकण्ठः शून्यगोणिटिका-(Rationbag)-द्वयं प्रदर्शयन् मलिनवेशो दरिद्रकरणिक-सदृशः प्रौढ़ः खः। आजानुलम्बितमस्य वसनम् )

खः— ( नेपथ्याभ्यन्तरत एव ) आगच्छतु समागच्छतु अधुनैव। असह्य-मेतत्; सर्वं जातमग्निमूल्यम्। आगच्छतु प्रलयः, प्रचण्डो विप्लवः, महामारी, ध्वंसः, आणविकवोम्बः पततु—

कः— शृङ्गमस्ति वास्य। ( सुष्ठु दृष्ट्वा ) नहि नहि, शून्यो हाम्बारवः।

आ— ( पुस्तकाद्दृष्टिमपनीय ) आः। कथमेवमुत्तेजितोऽसि? किं संघटितम्?

खः— ( सानुकारम् ) किं संघटितम्? प्रभात एव प्रसाधनपेटिकां स्कन्धे लम्बयित्वा चलच्चित्रपत्रिकां पठन्ती सलीलं कर्मस्थलं गच्छसि। जानासि किमेतादृशीम् अवस्थाम्? ( गोणिकाद्वयमधोमुखं विधाय दर्शयति ) गृहे मे वर्त्तन्ते कानिचिद् व्यात्तमुखानि गह्वराणि, भरणाय तेषां भ्रमत्ययं जनो मार्गान्मार्गम्।

( कः खस्याचरणानि सावधानं विचारयति )

आ— तत् कथमत्र गर्जसि? विपणिं गच्छ, अयमेव मार्गः ( हस्तेन निर्दिशति )।

खः— मार्गः? मार्गस्तु दर्शित एव, बहुभिरेव दर्शितः, गले हस्तं दत्त्वा केचिद्दर्शितवन्तः।

आ— ( विहस्य ) किं वृत्तिर्गता ? धर्मघटे युक्त आसीः किम् ?

खः— धर्मघटेऽधर्मघटे सर्वत्र युक्त आसम् ।

आ— तत् कथमेवं प्रलपसि तारस्वरेण मार्गे दण्डायमानः ?

खः— किमहं जीवामि न वेति प्रत्यक्षीकर्त्तुम् । अपि च गृहे मे कण्ठस्वरो न स्फुरति । अतः पथि मनोगतं प्रकाशयामि । नायं मार्गः कस्यापि पितुरधिकारे, यथेच्छमहम् ( क्रमेणोच्चैः स्वरेण ) अत्र प्रलपामि, तदेव कथयामि यदेवायाति मे जिह्वामूले, उच्चैः कथयामि, तारस्वरेण—

कः— ( सहसा कठोरस्वरेणादिशति ) Silence ( तूष्णीं तिष्ठ )

( खस्तच्छ्रुत्वा हस्तयुगलं मस्तकोपरि समुत्तोल्य शनैश्चलितुमारभते । )

कः— ( सम्मुखमागत्य ) तिष्ठ वत्स ! मृतोऽसि त्वम् ।

खः— एवम् ( समाश्वस्य ) तदेव ( अङ्गुलिद्वयस्याग्राभ्यां स्वदेहचर्म निष्पिष्य ) हुम्, नानुभवामि । ( ईषद्विहस्य ) मृतोऽहम् । नास्ति कापि विपत्तिः । ( क्रमेण सानन्दम् ) अहो मृतोऽहम्, कीदृश आनन्दः—मृतोऽहम । ( नृत्यति सानन्दम् )

आ— ( पुस्तकाद्दृष्टिमपनीय ) मत्तच्छद्मायं जनः परमप्रतिक्रियाशीलः । ( कमुद्दिश्य ) भविष्यति समुचिता व्यवस्थाचिरेणैव कालेनैतादृशानाम । आगच्छतु तत्रभवान्—

कः— कस्तावत्तत्रभवान् ? कदा वा आगमिष्यति ?

खः— कथं वागमिष्यति ?

आ— ( खं निर्दिश्य कमुद्दिश्य ) मत्तेनानेन किम् ? परं भवतापि न श्रुतम् ? अहो ? निष्फलमेषां जीवितम् ।

कः— तत्र कः सन्देहः।

खः— कथं निष्फलम्? गृहिणी मे पञ्चमीं कन्यां प्रसूय—

आ— आः, दण्डमर्हसि त्वम्।

खः— (सविनयम्) नासीत्तदा राष्ट्रिय-परिवार-परिकल्पनायाः प्रसरः। यातु,—कस्तावदत्रभवान्, य आगमिष्यति?

कः— कदा, कुत्र वागमिष्यति?

आ— किमपि न ज्ञायते? (प्रेक्षकानुद्दिश्य) का वा दशा भविष्यति देशस्यास्य, वसन्ति यत्रैतादृशा नागरिकाः वसुन्धराया भारस्वरूपाः।

खः— मम गृहे तु वर्त्तन्ते व्यात्तमुखा गह्वरसदृशा लघुदेहा मानवाकाराः केचन, अतो भारसाम्यं तु जातमेव।

कः— अहो महदुपकृतं त्वया।

खः— परं सर्वे ते अग्निगर्भाः। अन्तःक्षिप्तां प्रस्तरगुटिकामपि भस्मसात् कुर्वन्ति।

(अर्धच्छिन्नां दोदुल्यमानां पुस्तिकादिपूर्णां भस्त्रिकां स्कन्धे लम्बयित्वा प्रविशति गः, तच्चानुसरति भद्रवेशी घः तस्यापि स्कन्धे लम्बते भस्त्रिका, परं सा न छिन्ना।)

गः— आगच्छति तत्रभवान्, आगच्छतु नाम। किं तेन अस्माकम्? कपर्दकमपि नाहं दास्यामि प्रचारसञ्चये कस्यापि संघस्य।

घः— (सविनयं सहासं च)—हेँ—हेँ—हेँ। कथं कुप्यसि भ्रातः! तव कपर्दकेन तस्य किं प्रयोजनम्? देशे धनिकानां न जातोऽभावः। त एव दास्यन्ति कपर्दकादिकं मुद्रासञ्चयं वा। त्वया तु

व्यालटाख्य-निर्वाचनपत्रस्थितस्य तन्नाम्नः पार्श्वे—( हस्ताभ्यां गुणनचिह्नं दर्शयति ) दातव्यम् ।

गः— किम् ? निर्वाचनम् ?—भोटरङ्गम् ? वारं वारं निर्वाचनपत्रे एकस्यैव नाम्नः पार्श्वे चिह्नमङ्कितं मया, वारे तु अस्मिन् सर्वेषामेव नाम्नां पार्श्वे चिह्नान्यङ्कयिष्यामि ।

कः— ( उपसृत्य ) स्वगात्रेऽपि कति चिह्नान्यङ्कितव्यानि ।

घः— ( गाम्भीर्यमवलम्ब्य ) नैतत् सन्नागरिकस्य कर्त्तव्यम् ।

कः— ( घमुद्दिश्य ) कस्मिन् सङ्घे ? ( घः कस्य वाक्यार्थं न बुध्यत इति छलमाश्रयति )—पृच्छामि, कस्मिन् सङ्घे लिखितं महाशयस्य नामेति ।

खः— सङ्घः ? दलम् ? पार्टीति ख्यातम् ? नानातन्त्रध्वजावाहिनामेतेषां कदा नु भवेद्विलयः ?

आ— अचिरेणैव कालेन । आगच्छतु तत्रभवान् । खण्डयिष्यते सङ्घानामेषां चातुर्यम् ।

कः— ( घमुद्दिश्य ) किं बधिरोऽसि भ्रातः ? कस्मिन् दले सङ्घे, उपसङ्घे, सङ्घोपसङ्घे वा—

गः— किं वा श्रुतेन ? सङ्घानामद्यत्वे जातमानन्त्यम्, नामसादृश्यमेव विमोहयति जनान् । अतो नाम्नालम् ।

कः— तथ्यमुक्तं त्वया, तर्हि पृच्छामि कस्मिन् सङ्घसंघाते लिखितं ते नाम भ्रातः ? सङ्घमेलनमधुना राष्ट्रनीतिः ।

घः— यथार्थमुक्तम् । सङ्घानां सङ्घात एवाद्यत्वे बलम् । सर्वेषां सङ्घानां मेलनक्षेत्रं परं प्रगतिशीलानां वामपन्थिनां सङ्घानां मेलनक्षेत्रमेकं घटयिष्यते तत्रभवता । अहमेव—

( सवेगं प्रविशति सर्वथाधुनिकवेशसज्जितः कश्चिद् युवा 'ङ'नामा )

ङः— नूतनः सङ्घः, नवीना संस्था, सर्वं नवीनम्। घूणक्षतानां प्राचीनानां भवतु विनाशः। समागच्छतु नवीनः कालः। विचूर्णितं भवतु प्राचीनानां प्रतिक्रियाशीलानां जीर्णं दुर्गम्। समागच्छति तत्रभवान्। दूरीभविष्यति कालजीर्णा जन्म-मृत्यु-विवाह-शिक्षा-श्राद्ध-निर्वाचन-परिवार-परिकल्पनानां प्राचीना रीतिः।

खः— ( उपगम्य ) गमन-चलन-भाषण-भोजनोपवेशनोद्गारनैष्ठीवनव्यवस्थानां का गतिर्भविष्यति ?

ङः— ( क्षणं विचिन्त्य ) सर्वं नवीनरूपेण घटयिष्यते तत्रभवता।

कः— ( स्वगतम् ) उत्पाटितं भविष्यत्यस्य नवीनं तीक्ष्णं विषाणयुगलम्। न शिक्षितमनेन वप्रक्रीडाकौशलम्।

खः— भो भ्रातः, भवतु सर्वं नवीनम्, परं वस्त्रेन्धन-तैल-तण्डुल-लवणादीनां—

घः— ( त्वरितं कथासूत्रमवलम्ब्य ) न भविष्यति मूल्यवृद्धिः पुनरपि। अपि च प्राचुर्यं भविष्यति नित्यप्रयोजनीयद्रव्याणाम्।

खः— वृत्तिहीनानां का गतिर्भविष्यति ?

घः— भविष्यति नवीनं कर्मसंस्थानम्, कर्मविनियोगाख्य-राष्ट्रिय-संस्थाया भविष्यति नवीनरूपेण पुनर्विन्यासः।

गः— वेतनवृद्धिं कामयद्भिः पुनर्विप्लवो विधेयो न वा तदेव कथय भ्रातः।

ङः— वेतनवृद्ध्यर्थं कथङ्कारं विप्लवः ? विप्लवस्तु—

घः— अ-ह-ह ( ङमुद्दिश्य ) अहमेव बोधयाम्येनम्। ( गमुद्दिश्य ) किमिच्छसि त्वम् ?

गः— वेतनवृद्धिः।

घः— भविष्यति, निश्चितं भविष्यति।

कः— किं विना विप्लवं सा भविष्यति न वा तदेव प्रष्टुकामोऽयं जनः ( गं दर्शयति )

घः— कर्मविरतिद्वारेणायाति—वेतनवृद्धिः। स तूपायो धर्मघटशब्दे-नोच्यते।

खः— स एव विप्लव इति कथ्यते न किं भवद्भिः ?

गः— 'घेराओ'नामव्यापारो वा धर्मघटाख्यकर्मविरतिर्वा यथा तथा संज्ञा भवतु नाम, एक एव व्यापारः। स एव विप्लव इत्येभि-र्नेतृवर्यैरुच्यते। मया तु पृच्छ्यते विना तत्सर्वं शिक्षाकाणां कारणिकानां वा वेतनवृद्धिर्भविता न वा।

खः— ( सहासम् ) किं क्लान्तोऽसि भ्रातः ? अहमपि श्रान्तः क्लान्तोऽधुना।

ङः— ( सर्वं श्रुत्वा रुष्टः ) मध्यवित्तानामेषामयं स्वभावः। ( सानुकारम् ) वेतनवृद्धिः, द्रव्यमूल्यह्रासः—। प्रतिक्रियाशीलानामेषां—( सहसा कोपं संहृत्य ) यातु, आगते तु दिवसे भविष्यति विचारः।

घः— एवं, स्थिरो भव भ्रातः! स्वार्थं समीक्ष्य कदापि कोपो न करणीयः।

आ— ( पुस्तकाद् दृष्टिमनीत्वा ) समागच्छतु तत्रभवान्। अभिनन्दयिष्यामि सादरं नवीनं तत्रभवन्तम्।

घः— अभिनन्दनम् ? किमभिनन्दनेन ? प्रयोजनं शोणितोत्सर्गस्य।

घः— एवमेव। परमन्येषां विरोधि-सङ्घमुक्तानां जनानां कृतेऽथवा जनगणस्य कृते इयं व्यवस्था।

कः— ( उपगम्य ) कियत् परिमाणं तस्य ?

गः— ( सभयमपसृत्य ) मम तु रक्तहीनता वर्त्तते—'एनिमी'याख्यो रोगः।

खः— प्रचार-निर्वाचन-सञ्चये कपर्दकमपि दातुं न शक्नोमि, परं शोणितम् ? तत्तु कुत्रापि न प्राप्यते गृहे हट्टे मार्गे कुत्रापि न ?

ङः— तदर्थं तु वर्त्तन्ते तरुणाः।

आ— ये तावत् 'शहीदा'ख्यमुपाधिं लब्धुकामाः।

कः— तत्र तु तन्नामधेयः स्तम्भो वर्तते, तत्र यदि सभा काचिदनुष्ठीयेत तर्हि बहवः 'शहीदे'त्याख्याभाजो भवेयुः।

आ— ( सोत्साहम् ) सभा—महती सभानुष्ठेया। आगमिष्यति तत्र-भवानचिरेणैव कालेन, भवतु सभा, प्रचलतु प्रचाराभियानं गृहे गृहे, हट्टे, मार्गे, विद्यालये, विश्वविद्यालये सर्वत्र। मया तु गास्यते गीतं, नर्त्तनेऽपि नाहं कुण्ठिता ( नृत्यति )।

कः— तत्तु दृश्यते एव। परं क आगमिष्यति, कदा वा ?

ङः— नवीन आगमिष्यति, नूतन आगमिष्यति।

घः— आगते तस्मिन् भविष्यति यत् निर्वाचनम्, तस्य भारस्तु मया ग्रहीष्यते।

कः— भवता कथमेवं श्रमोऽङ्गीकरिष्यते ?

घः— हें-हें-हें (विहस्य) मया तु ज्ञायते एव केनोपायेन निर्व्वाचने विजय आयाति। दीर्घकालमभ्यस्यता मया निर्व्वाचनव्यापारे प्रयोजनीय-मारणोच्चाटन-वशीकरणादिषु कर्मसु प्रावीण्यमर्जितम्।

ङः— (श्रुत्वा) एवंविधाया निर्वाचनव्यवस्थाया उच्छेदो विधेयः।

घः— कथं भ्रातः? कथमेवं सन्देहः?

ङः— किं भविष्यति निर्वाचनव्यवस्थया?

घः— कथम? वृत्तिहीनानां कर्मसंस्थानम?

गः— सङ्घोपसङ्घविभक्तं जनमतम्। निरर्थकमतो निर्वाचनम्। कस्यापि सङ्घस्य न भविष्यति निर्वाचितसदस्यानां संख्यागरिष्ठता।

घः— तदेव गणतन्त्रस्य माहात्म्यम्। दुर्वहः संख्यागरिष्ठभारो न दीर्घकालं यावत् सोढव्यः, विशेषतोऽस्मिन् दरिद्रे देशे। परं प्रतिवर्षं चेन्निर्वाचनमनुष्ठीयते, तर्हि विचारय भ्रातः, चक्रक्रमेण कति वृत्तिहीना वृत्तिं लभेरन्।

ङः— निर्वाचनम्—! नैतादृशी निर्वाचनव्यवस्था मे रोचते। आगते नवीने विलयं यास्यतीयं निर्वाचनरीतिः।

घः— तत्तु पश्चात्। आदौ तावन्निर्वाचनद्वारेणैव नवीनस्य नेतृत्व-प्राप्तिस्ततो यदि रोचते तर्हि निर्वाचनव्यवस्थाया लोपो वा परिवर्त्तनं वा।

ङः— न तत्रभवान् निर्वाचनमपेक्षते, निर्वाचित एव स आगमिष्यति।

घः— केन निर्वाचितस्तदेव कथय।

गः— न मया 'भोटा'ख्यसम्मतिर्दत्ता।

कः— परं कः स य आगमिष्यति आगच्छति वा ।

आ— आगतमेव द्रक्ष्यसि ।

खः— अधुनैवाहं द्रष्टुमिच्छामि। अन्यथा न दास्यामि 'भोटा'ख्यां सम्मतिम् ।

घः— अ-ह-ह-ह, कथमेवमुत्तेजितो भवसि। तिष्ठ क्षणम् ।

खः— स्थितं क्षणं, दिनं, मासं, वर्षं युगम्,अपि तु कोऽपि नागतः। अधुना ज्ञातुमिच्छामि क आगमिष्यतीति ।

ङः— प्राचीनानां प्रतिक्रियाशीलानामेवायं प्रश्नः, क आगमिष्यति, कदागमिष्यति, आगते वा किं भविष्यतीति। नाहं प्रश्नानामेषामुत्तरं दातुमुत्सहे ।

आ— किमयं परीक्षालयः? परीक्षालयात् शिक्षका इव विताड़यितव्या एते देशादेव।

कः— तथ्यमुक्तम्। (खमुद्दिश्य) शृणु भ्रातः, प्रश्नो न करणीयः, यतो नास्ति ते शृङ्गम् ।

खः— तर्हि किं विना प्रश्नं यं कमपि—

कः— नेतृपदे स्थापयामः? किं तेन? प्रश्नस्तावद्विपत्तिमानयति। किं न श्रुतं पठितं वा संवादपत्रलिखितम्? विश्वविद्यालयेऽपि प्रश्न एव विपत्तेः कारणम्।

घः— अतएव निर्वाचनप्रचारेऽस्माभिर्ध्वनिः समुत्थापयिष्यते,—विलयं यातु परीक्षाव्यापारः, प्रश्नो न कर्त्तव्यः, विद्यालये महाविद्यालये, विश्व-विद्यालये च ये तावल्लब्धप्रवेशास्त एव 'सार्टिफिकेटा'ख्यं निदर्शनपत्रं प्राप्तुमर्हन्ति ।

ङः— एवमेव करणीयम्। परीक्षावैतरणीं केचिदुत्तीर्णाः केचिदनुत्तीर्णा इति भेदनीतिः सर्वापदां मूलम्। साम्राज्यवादिनामियं नीतिस्तु सर्वथा वर्जनीया।

( ऊ-नाम्नी भद्रमहिला च-नामानं स्वभर्त्तारं प्रौढ़मध्यापकं समाकृष्यानयन्ती प्रविशति )

ऊः— आगच्छ, सत्वरमागच्छ रे दग्धवदन, सत्वरमागच्छ। विश्वविद्यालये छात्राणां पुरतो भृशं मकमकायमानस्य ते मस्तकस्थितो धूसरः पदार्थः साफल्येन व्ययितः किम्? किमेतदपि न ज्ञायते यद् विलम्बे कार्य्यहानिर्जायते?

चः— शृणु, शृणु, कथमेवं त्वरा? विचार्यतामादौ—

ऊः— विचारयन्नेव जीवनमतिवाहितवान्। अधुना निर्विचार एव प्रागेसरो भव।

चः— अ-ह-ह—अस्ति खलु वृद्धवचनं—"वारद्वयं विचार्यतां यदि स्यादुल्लम्फनेच्छा": इति। प्राग्रेसरो भवामि अग्रे यदि गर्त्तो वर्तते?

कः— ( उपगम्य ) तत्र निर्विचारमेव पतितव्यम्।

चः— पतितव्यम्? भवतापि कथ्यते तत्र पतितव्यम्।

ऊः— एवमेव। ( कमपसारयति ) अपसरतु भवान्, गन्तव्यमावयोः—

चः— ( कमुद्दिश्य ) शृणोतु भवान्, नास्ति मे वासना नवीनं कमपि द्रष्टुम्। प्राचीनोऽहम्, किन्तु गृहिणी मां कर्षति—

कः— नवीने मार्गे

खः— कदापि न गन्तव्यं महाशय ! गृहिणीप्रदर्शितमार्गेण निर्वाचन-'भोट'-भिक्षुप्रदर्शितेन वा मार्गेण कदापि न गन्तव्यम् ।

घः— नैतदात्यन्तिकं भ्रातः, नास्ति गतिरद्यत्वे विना निर्वाचनम् ।

ङः— तदेव कथयतु भवान् तदेव कथयतु । पश्यतु तावत्, अयं मे पतिः—

कः— दृश्यते, किमस्य ?

ङः— दीर्घकालं यावदध्यापनाकार्ये लिप्तः, परं नास्ति वास्तवज्ञानम् । उच्यते मया यदागच्छति नवीनः, गच्छ तस्य सकाशम्—

घः— तदेव विधेयं भ्रातः । मया सह गन्तव्यम् । अहमेव नेष्यामि ।

गः— न गन्तव्यं भो महाशय । मैवं कर्म कुरु ।

घः— कथम् ?

गः— उक्तञ्चानेन भद्रमहोदयेन ( खं दर्शयति ) गृहिणीप्रदर्शितमार्गेण निर्वाचन-भिक्षु-प्रदर्शितमार्गेण वा न गन्तव्यमिति ।

घः— उक्तञ्च मयापि नैतदद्यत्वे आत्यन्तिकमिति ।

कः— ( सहासम् ) तत्र गन्तव्यमेव भ्रातः ! नवीनेघट्टे चेन्नौका त्वां प्राप्नोति समाश्रयम्, तर्हि लोकसभायां विधानसभायां वा—( इङ्गितेन बोधयति )

आ— स्वार्थपराणामेषां नास्ति स्वार्थं विहायान्या चिन्ता । का गतिर्भविष्यत्यस्य देशस्य ।

गः— न तु क्वापि नवीना गतिः । आसीद्दुर्गतिः, अस्ति च भविष्यति सैव ।

ङः— नहि, नहि । आगच्छतु नवीनः, दूरं यास्यति दुर्गतस्य जनगणस्य दुर्गतिः, परं प्राचीनानां प्रतिक्रियाशीलानां शिरांसि सैव पुनः समाश्रयिष्यति ( इङ्गितेन छेदनं बोधयति )

चः— ( सभयम् ) तर्हि किं प्राचोनोऽयम् ?

कः— नवीनो भवतु भवान् ।

चः— केनोपायेन ?

खः— तदपि न जानाति ? स्वगृहीणीं पृच्छतु ।

घः— हेँ-हेँ-हेँ, ताः खलु जानन्ति नवीकरणविद्याम् । अहमपि जानामि ।

कः— नास्त्यस्य महाशयस्य नवोनत्वलाभ-सम्भावनेति मन्ये । ( चस्य मस्तकं दृष्ट्वा ) नासीदस्य कदापि शृङ्गम्, बाल्यादेव शृङ्गहीनोऽत्र-भवान् ।

घः— तथापि यत्नो विधेयः, यत्ने कृते कदाचित् सिध्येत् । आगच्छतु तत्रभवान्, निर्वाचनद्वारेण सर्वे वयं नवीना भविष्यामः ।

ङः— निर्वाचनद्वारेण—हुँ—। आगच्छतु तत्रभवान् नवीनः—निर्वाचन-भिक्षूकाणामेषां—( कोपं संहृत्य )-यातु ।

चः— कस्तावदागमिष्यति यदर्थमहमत्रानीतः ?

आ— ( स्वगतम् ) हतभाग्यो मूर्खो वृद्धः ( चमुद्दिश्य ) अध्यापको भवान्, एतदपि न जानाति क आगमिष्यतीति ?

चः— नहि । परमेतज्जानामि यत् कोऽपि न जानाति ।

ङः, घः, आ—( समकालम् ) नहि नहि । सर्वे जानन्ति ।

चः— सर्वे जानन्ति ? (कमुद्दिश्य) किं जानाति भवान् क आगमिष्यतीति ? (कः शिरःकम्पनेनास्वीकरोति) भवान् ? भवान् ? (गं तथा खमुद्दिश्य तावपि क इवाचरतः) किं भवान् जानाति ? (ङमुद्दिश्य)

ङः— जानामि, नवीनः समागमिष्यति ।

आ— अहमपि जानामि समागमिष्यति नवीनः ।

घः— एवम्, नवीनं निर्वाचनम् ।

चः— कोऽसौ तावन्नवीनः ?

ङः— नवीनस्तु नवीन एव । नास्ति तस्य विशेषणान्तरम् ।

ऊः— कथय भ्रातः कथय । एनं (चं निर्दिश्य) मूर्खपण्डितं कथय । नास्त्यस्य प्रश्नस्य सीमा । कस्तावन्नवीनः, कुतो वागमिष्यति नवीनः, कथं वागमिष्यतीति । नवीनस्तु नवीन एव ।

आ— अहो, नवीनो नवीन एव । प्रभाते शिशिरस्नातं सद्योविकशितं नवीनसूर्य्यकिरणस्नातं कुसुममिव नवीनो नवीन एव । (आनन्देनाक्षियुगलं निमीलयति) ।

कः— एतावता बुद्धं नवोनो नवीन एवेति । तर्हि किमधुना विधेयम् ? (ङमुद्दिश्य) कथयतु भवान्, (ऊमुद्दिश्य) भवती वा ।

आ— कथं नाहं कथयामि ? अहमपि वक्तुं शक्नोमि ।

गः— अहमपि ।

खः— किमहं तूष्णीं स्थास्यामि ?

घः— राजनीति-संक्रान्त-सभां विहाय नाहं वक्तुमुत्सहे यत्र कुत्रचित्। तथापि कथयामि। अधुनैवात्र काचित् सभानुष्ठेया। सभायामेव निर्णीतं भवतु किमत्र विधेयमिति।

गः— सभायां सर्वं भविष्यति विना तु निर्णयम्। उपसमितिः काचिद्विधेया।

घः— भवतु तावदुपसमितिरेव। अहमेकः सदस्यस्तस्या उपसमितेरिति मया प्रस्तूयते।

( कस्तथा चस्तूष्णीं तिष्ठतः )

सर्वे— अहमपि सदस्यः। सदस्यः, अहमपि............

कः— हुम्, भो शृण्वन्तु सर्वे। एकेन तावदपरस्य नाम प्रस्तूयते, अन्येन च समर्थ्येत इति हि सभारीतिः।

आ— प्राचीनेयं रीतिर्नात्र ग्रहणीया।

ङः— विलयं यातु सर्वं प्राचीनम्, भवतु विचूर्णितं प्राचीनानाम् अचलायतनम् ( लम्फं दत्त्वायं कमपि प्रहर्तुमुद्यतः )

कः— ( ङं धृत्वा ) स्थिरो भव भ्रातः, स्थिरो भव। भवतु द्वयमेव, सभाप्यनुष्ठेया, उपसमितिरपि घटनीया।

ऊः— तथ्यमुक्तम्। भवतु मम पतिरेव सभायाः अस्याः सभापतिः।

आ— उपसमितेः सम्पादको भवतु अयं तरुणः ( इति ङं निर्दिशति )

घः— सानन्दं समर्थ्यते मया प्रस्तावद्वयमपि सर्वान्तःकरणेन।

कः— तर्हि प्राक् सभानुष्ठेया—

२

खः— अनुष्ठीयताम्। परं मया प्रस्तूयते सभापतिर्वा सम्पादको वा निर्वाचने नांशग्रहणं करिष्यतीति।

घः— तत्तु निर्धारयितव्यमालोचनया।

ङः— कथं वा सभापतिमहोदयस्य मम पत्युरनुमतिं विना भवद्भिरालोच्यते ?

घः— अनुमतिः प्रार्थ्यते मया।

आ— कथम् ?

घः— भाषणदानाय।

गः— मयापि प्रार्थ्यते।

खः— मयापि

ङः— तर्हि कस्तावत् श्रोता ?

कः— हुम्, तथ्यमुक्तं भवत्या। भो भ्रातरः, श्रोतव्यमस्माभिर्न वक्तव्यम्, नेतार एव भाषणं दास्यन्ति, श्रोतव्यं निर्विचारमेवास्माभिः।

खः— किमुक्तम् ? कथं त एव कथयिष्यन्ति ? किं वा कथयिष्यन्ति ?

कः— नेतारस्तावद् यथेच्छं भाषन्ते, वयं तु श्रोतारः।

आ— कथमेभिः सह भवता वाग्व्यवहारः क्रियते ?

ङः— (अङ्कुशमुद्राघातेन चं समुत्तेजयति) कथमेवं जड इव तूष्णीं स्थितोऽसि ? भाषणमारभस्व। (चस्तु निर्बोध इव तां पश्यति, ङः पुनरपि) सभापतिस्त्वमसि, भाषणं दातव्यम्।

(अनिच्छन्नपि चः सज्जो भवति, तत्पूर्वमेव गः संयतस्त्वरितं पार्श्वमेकं गत्वा प्रेक्षकानुद्दिश्य भाषते।)

गः— समागता भद्रमहोदयास्तथा—तथा जनन्यश्च, वयमद्यात्र समवेताः—समवेताः—समवेताः ( कमुद्दिश्य ) कथं समवेताः ?

कः— ( सहासम् ) नाहं जाने, अपरं कमपि पृच्छ।

घः— ( आत्मविश्वासी कण्ठस्वरबाधामपनीय ) हें, हें, वयमद्यात्र समवेताः नवीनदलस्य कृते नवीननेतृवर्यस्य कृते वा किमस्माभिः करणीयमिति निर्धारयितुम्। वाममार्गावस्थितानां नेतृवर्याणां कृते वा किमस्माभिः करणीयमिति च निर्धारयितव्यमत्र। निर्वाचनाय नवीनमतप्रचाराय च प्रयोजनमद्यार्थस्य—

खः— कपर्दकमपि न दास्यामि।

गः— ( सानुकारम् ) न दास्यामि। गले हस्तं दत्त्वा हरिष्यन्त्येते।

आ— देशस्य कृते, समाजस्य मङ्गलाय चैते यत्किञ्चिदर्थमपि दातुं नेच्छन्ति। का गतिर्भविष्यत्यस्य देशस्य।

ङः— ( पुनरपि चं प्रोत्साऽयति ) सभापतिस्त्वम्; त्वरितं भाषणमारभस्व। अन्यथा सङ्घे ते नेतृत्वं न स्थास्यति।

( चः किमपि वक्तुं यतते )

खः— नेतृत्वम्! कस्य नेतृत्वम्? नाहं नेतारं कमपि जाने। अहमेव नेता। कथयाम्यहं श्रोतव्यं सर्वैः। शृणन्तु सर्वे ( दर्शकानुद्दिश्य ) शृण्वन्तु समागताः सर्वे, नास्त्यद्यत्वे भाषणेन प्रयोजनम्। प्रयोजनमद्यत्वे, प्रयोजनमधुनैव तण्डुलेन। गृहे वर्त्तन्ते व्यात्तमुखानि गह्वराणि—

आ— गह्वरपूरणाय मृत्तिका तावदण्वेषणीया।

गः— मृत्तिका तु प्रस्तरीभूता।

कः— ( सहासम् ) कर्करीभूतं तदपि मनुष्योदरगह्वरपूरणे विनियोज्यते।

घः— तदर्थमेव कथयामि भ्रातरः, निर्वाचने भवतां कृपया यदि मया समर्थितो नवीनो योऽयमागमिष्यति—स यदि विजयो भवेत्तर्हि—तर्हि कर्करं—कर्करं—

गः— कर्करं तण्डुलाय कल्पयिष्यते ?

घः— न हि न हि प्रचुरं तण्डुलं—तण्डुलं—

कः— ( सहासम् ) कर्करैः संमिश्र्य दास्यते गह्वरपूरणाय

आ— कथमेभिरेवं कर्कर-तण्डुल—तडुल-कर्करमिति कर्करायते ? तूष्णीं तिष्ठन्तु सर्वे, तूष्णीं तूष्णीं—

ऊः— ( मत्तेव ) कथम ? त्वं तावत्तूष्णीं तिष्ठ। ( पुनरपि चमङ्गुल्याघातेन प्रोत्साहयति ) अरे मूर्ख, वर्वराध्यापक, अधुनापि वर्त्तते समयः, भाषणं—भाषणम्।

चः— ( वारद्वयं कण्ठस्वरबाधामपनीय ) भ्रातरः, भगिन्यश्च ( उक्त्वैव ऊं दृष्ट्वा जिह्वाकर्त्तनं कृत्वा पुनश्च स्वरबाधामपनीय ) भद्राश्च, वयमद्यत्वे कथमत्र समवेताः ? समवेता वयं विचारयितुं कथं वयं विस्मृतपूर्ववृत्तान्ता जाता इति। ( श्रेण्यामध्यापनरीत्या ) सर्वमस्माभिर्विस्मृतम्। विस्मृतमस्माभिर्यदस्मिन्नेव भारते वर्षे तदैवाभवत् सभ्यतायाः पूर्णो विकाशो यदाङ्गलानां गुहावासिभिश्चित्रिताङ्गैः पूर्वपुरुषैर्न शिक्षिताग्निचयनविद्येति। ( क्रमेणोच्चैः ) विस्मृतमस्माभिर्यदस्मिन्नेव भारते वर्षे शक-हुण-पह्लवादयो वैदेशिका आक्रमणकारिरूपेणागत्य स्वीकृतवन्तो भारतसभ्यताम्, स्वल्पेनैव कालेन ते सर्वथा संवृत्ता भारतीयाः, परिगृहीतवन्तो भारतीयं धर्ममतम्, भारतीयां संस्कृतभाषामिति। यवनदूतो होलिओदाख्योऽ-

भवत् परमभागवतः, संस्कृतभाषया लेखं प्रचारयामास महाक्षत्रपो रुद्रदामा, देशाद्देशान्तरं विस्तारयामास सौगतमतं कूषाणवंशीयः कनिष्कः। कथमेतत् सर्व्वं संघटितम् ? विचारयितव्यमद्य—

गः— किमेषा विद्यालयस्येतिहासश्रेणी ? वयं किं छात्राः ?

खः— वयमत्र प्राचीनभारतस्येतिहासं श्रोतुं नागताः।

चः— न केवलमितिहासः, अन्यदप्यस्ति। काव्य-नाटकादिष्वपि भारतीयानां नैपुण्यस्य साक्ष्यं वहन्ति कालिदासादीनां काव्यम्। महाकविना कालिदासेनोक्तं—

वागर्थाविव संपृक्तौ वागर्थप्रतिपत्तये।
जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ॥

आ— कथमनेन काव्यं पठ्यते ?

ऊः— ( चं प्रोत्साहयति पूर्ववत् ) किमेतदारब्धम् ? नवीनमतमवलम्ब्य—

चः— ( अतिव्यस्तः ) नवीनमतं तावदुपलभ्यते महामुनिना पाणिनिना विरचितेऽष्टाध्यायिग्रन्थे। तत्र तावदादौ महेश्वरसूत्राणि—अ इ उ ण्। ऋ ऌ क्। ए ओ ङ्। ऐ औ च्। हयवरट्। लण्—

खः— किमेवं हजवरलं कथयति ? तूष्णीं तिष्ठ त्वम्।

गः— तूष्णीं तूष्णीं तिष्ठ। न वयं मत्तप्रलापश्रवणाय समवेताः।

घ— एवम्। उपविशतु भवान् ( च उपविशति भूमावेव )। अहमेव निर्वाचनव्यापारं व्याख्यामि। परं कथं वा सभापतिरेव प्रथमं भाषते। अहमेव भाषणं—

खः— कथं त्वम् ? अहमेव—

गः— अहमपि भाषणम्—

कः— ( विहस्य ) सर्वे समकालं कथयन्तु—

( सर्वे समकालं दण्डायमाना वदन्ति यदृच्छाक्रमेण-निम्नलिखितम् । फलं तु तस्यापूर्वः कोलाहलः । )

खः— वयमद्यात्र समवेताः—

गः— तैल-तण्डुल-प्रभृतीनां मूल्यवृद्धिर्यथा न स्यात्—

खः— कारणिकानां शिक्षकाणां वेतनवृद्धिर्यथा—

घः— वृत्तिहीनानां कृते—

आ— समाजतन्त्रप्रतिष्ठाकार्य्यं यथा त्वरान्वितं भवति

घः— गणतन्त्रस्य तावदयमेव महिमा यत्—

कः— ( उच्चैः ) भो भ्रातरः, भो भगिन्यः ( सर्वे सुस्थिराः ) मन्ये समागतस्तत्रभवान् कोऽपि । तर्हि किमधुना विधेयम् ?

घः— अधुना तु अभ्यर्थना, मयैव तावत्—

ऊः— कथं भवता, मम पतिरेव—

आ— ( सानुकारम् ) पतिरेव ! अहमेव संगीतेन नृत्येन वा तमभिनन्दयामि ।

गः— कथं नाहम् ? अहमप्यादौ संवर्धनां विज्ञापयामि—

खः— अहमेव, अहमेवादौ

( सर्वे समकालं अहमहमिकया गन्तुं व्यवसिताः )

आ— ( ऊमाकृष्य ) अयि वृद्धे, कथं त्वमादौ गच्छसि ? अहमेव—

ङ— किमहं वृद्धा ? अरे रे मार्जारि ( आमाकर्षति )

च:— ( उपगम्य ) कथमेवं शिष्टाचारं विसर्जयसि ?

ङः— ( सकोपं ) शिष्टाचारं शिक्षयामि तावत् त्वामेवादौ ।

( चमाक्रामति )

च:— ( उपसृत्य ) अह्-ह, पथि एवं न शोभते ।

घ:— तर्हि अहमेव प्रागेसरो भूत्वा—

ख:— ( घमाकृष्य ) प्रागेसरोऽहमेव भवामि, मयैवादौ अभ्यर्थना विज्ञापनीया ।

गः— ( उभयमाकृष्य ) कथं नाहम् ? अहमेवादौ—

ङः— ( सर्वान् अपसार्य ) अहमेवादौ गच्छामि ( चलितुमारभते )

खः— ( ङमाकृष्य ) अरे-रे मर्कट—

कः— ( उपगम्य ) सर्वे समकालमेव गच्छन्तु । किं विवादेन । ( अहमेवादौ अहमेवादौ इति उच्चारयन्तः सर्वे अहमहमिकया मञ्चस्य पृष्ठ-भागे वृत्ताकारेण भ्रमन्ति । क्रमेण च श्रान्तास्ते, तथापि पूर्ववदेव भ्रमन्ति । एकोऽपरमाकृष्य प्राग्रेसरो भवति, कोऽपि वा पतति पुनरुत्थाय चलति । सर्वे अहमेवादौ इति कथयन्त एव भ्रमन्ति )

च:— किमेभिः क्रियते ?

कः— कथम् ? वृत्तं रचयन्तो घूर्णायमाना वर्तन्ते ।

च:— किमस्य फलम् ?

कः— अभिनयः । रूपकमभिनीयते ।

चः— रूपकमभिनीयते ? नेयं नाट्यरीतिः, विशेषतो भारतीया नाट्यरीति ।

कः— ( विहस्य ) भारतीया नाट्यरीतिः—

नाट्ये मार्गे विहित-विभवा रङ्गकच्छन्नरूपा
या खल्वासीद् भरतदुहिता कामिनीरीतिराख्या ।
वृद्धैः सार्धं चिरमभिरता सा तु जाताद्य वृद्धा
तस्यां चित्तं यदि न रमते नापराद्धा नवीनाः ॥

चः— अधुना मया किं विधेयम् ?

कः— तत्तु त्वयैव ज्ञातम् ।

चः— किं तर्हि भरत-वाक्यमुच्चारयामि ?

क— अथ किम्

चः— तर्हि एवं भवतु—

कालस्य गतिमालोच्य साम्प्रतं प्रार्थयामहे ।
अस्तु मे मङ्गलं नित्यं भवतामस्तु वा न वा ॥

यवनिका

—०—

14. Nala-damayantiyam (a new Drama) of M. M. Kalipada Tarkacharya. Rs. 2 ; Rs. 1.50 (out of stock).

15. Prashastapada-bhashyam—Edited by M. M. Kalipada Tarkacharya. Rs. 4 ; Rs. 3 (for members).

16. Yatratattvam of Raghunandana Bhattacharya—Edited by Pt. Dwarikanath Nyayashastri. Rs. 2 ; Rs. 1.50 (for members).

17. Rik-pratishakhyam—Edited by Dr. Pasupatinath Shastri, M.A., B.L., Ph.D with the assistance of Prof. Chintaharan Chakravarti, M.A. Rs. 5 (Out of stock).

18. Prameyaratnavali of Baladeva Vidyabhushana—by Prof. Akshayakumar Shastri. Rs. 2.50 ; Rs. 2 (for members).

19. Chhandogyamantrabhashyam of Gunavishnu—Edited by Prof. Durgamohan Bhattacharya, M.A. Rs. 7.50 ; Rs. 6 (for members). (Out of stock).

20. Bhasharatnam of Kanada Tarkavagish—Edited by M. M. Kalipada Tarkacharya. Rs. 7 ; (Out of stock).

21. Manodutam of Vishnudasa—Edited by Prof. Chintaharana Chakravarti, M.A. Rs. 1.25 ; Re 1 (for members).

22. Prasanta-ratnakaram (a new Drama) of M. M. Kalipada Tarkacharya. Rs. 2 ; (Out of stock).

23. Devisatakam of Mahamahopadhyaya Krishnanath Sarvabhauma—Edited by Pt. Janakinath Shastri. .75 P ; .62 P (for members).

24. Sataranja Kutuhalam Edited by Prof. Chintaharana Chakravarti Kavyatirtha, M.A. .50 P.

25. Satyanubhavam (a new Mahakavya) of M M, Kalipada Tarkacharya. Rs. 5.

26. Sukhalekhanam of Bharata Sena—Edited by Pt Ramdhan Sastri. Rs. 1.50 P ; Rs 1.25 P for members).

27. Manavaka-gauravam—(Drama) by M. M. Kalipada Tarkacharya. Rs. 2.50 P and Rs. 2 (for members).

28. Kapala Kundala—(a drama based on Bankimchandra's Kapala Kundala) by Prof. Bishnupada Bhattacharya. Rs. 1.50 P and Rs. 1.25 P (for members).

29. Brahmana-Sarvava—(A Pre-sayana Vedic Commentary) of Halayudha, Edited by Prof. Durgamohan Bhattacharya. Rs. 25.

30. Natakaparibhasa of Singabhupala—Edited by Prof. Dr. Kalikumar Datta Sastri. Rs. 3 ; (Rs. 2 for members).

31. Daridra-durdaivam—(Prahasana) by Pt. Srijiva Nayatirtha. Rs. 3 ; (Rs. 2 for members).

32. Aranyakavilasam—(Khandakavyam) by Pt. Jadavendranath Nyayatarkatirtha. Rs. 3/-

33. Sardulasakatam—(Praharana) by Dr. Birendrakumar Bhattacharya. Rs. 3 ; Rs. 2.70 (for members).

34. Vestana-vyayoga—(Prahasana) by Dr. Birendra Kumar Bhattacharya, Rs. 2 ; Rs. 1.50 (for members).

35. Ekalavya-Gurudakshinam—(a Nataka) by Pt. Durgaprasanna Vidyabhusan, Rs. 3 ; Rs. 2.50 (for members).

36. Mandakranta-vrittam —(a Khanda kavya) by Mahamohopadhyaya Dr. Kalipada Tarkacharya. Rs. 5.

37. Dharitripati-nirvachanam—(Prahasana) by "Buroda", Rs. 2 ; Re 1.50.

38. Atha Kim—(Sative) by "Buroda", Rs. 2.50 ; Rs. 2 (for members).

Available at :
SANSKRIT SAHITYA PARI[illegible]
Calcutta-4 :: Phone : 55-31[illegible]